यदि वा दधे यदि वा न । यो अस्याध्यक्षः परमे व्योमन् । सो अङ्ग वेद यदि वा न वेद । [15]किंस्विद्वनं क उ स वृक्ष आसीत् । यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तत् । यदध्यतिष्ठद्भुवनानि धारयन् । [16]ब्रह्म वनं ब्रह्म स वृक्ष आसीत् ॥ ७६ ॥ यतो द्यावापृथिवी नि-

---

मेव नास्ति तमिमं निर्णयं यः परमेश्वरोऽस्य जगतोऽध्यक्षः स्वामी सो अङ्ग वेद स एव वेद यदि वा सोऽपि न वेद । ईशित्रीशितव्यादिलौकिकव्यवहारदृष्ट्या सो अङ्ग वेदेत्युक्तम् । "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिसर्वव्यवहारातीतपरमार्थदृष्ट्या यदि वा न वेदेत्युक्तम् । अतो मनुष्यादिषु तद्वेदनशङ्काऽपि दूरापेता ॥

[18]अथाष्टमीमाह । लोके हि गृहं चिकीर्षुः पुमान् वनं गत्वा तत्र कंचिद्वृक्षं छित्वा तदीयैः काष्ठैर्गृहं निर्ममीते । तद्दृष्टान्तेनात्रापि यतः यस्माद्वनजन्याद्वृक्षात् द्यावापृथिवी द्युलोकभूलोकौ निष्टतक्षुः तक्षणेन निर्मितारो निर्मितवन्तः । तादृशं वनं किंस्विद्भवेत् । कश्च तादृशः स वृक्ष आसीत् । हे मनीषिणो बुद्धिमन्तः मनसा स्वकीयेन विचार्य तदिदमर्थद्वयमाचार्यसमीपे पृच्छत । किंच यत्कारणभूतं वस्तु भुवनानि सर्वांल्लोकान् स्वात्मनि धारयन्नध्यतिष्ठत् नियमनमकरोत् तदिदु तदपि वस्तु पृच्छत ॥

[19]अथ नवमीमाह । यदुक्तं मनीषिणां प्रश्नत्रयं तस्याचार्य उत्तरं ब्रूते । यस्माद्वनजन्याद्वृक्षात् द्यावापृथिव्यौ निर्मिते तद्वनस्या-

ष्टतक्षुः । मनीषिणो मनसा विब्रवीमि वः । ब्रह्माध्यतिष्ठद्भुवनानि धारयन् । [17] प्रातरग्निं प्रातरिन्द्रꣳ हवामहे । प्रातर्मित्रावरुणा प्रातरश्विना । प्रातर्भगं पूषणं ब्रह्मणस्पतिम् । प्रातस्सोममुत रुद्रꣳ हुवेम । [18] प्रातर्जितं भगमुग्रꣳ हुवेम । वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चित् ॥ ७७ ॥

---

नीयं तद्वृक्षस्थानीयं ब्रह्मैव, तस्य सर्वशक्तित्वात् । यस्योत्पाद्यस्य या सामग्र्यपेक्षिता सा सर्वा तस्मिन्विद्यते । तदेव ब्रह्म सर्वाणि भुवनानि स्वस्मिन् धारयति नियमयति च । हे मनीषिणः आचार्योऽहं मनसा निश्चित्य वः युष्मभ्यं विब्रवीमि विविधमुत्तरं ब्रवीमि ॥

[17] यदुक्तं सूत्रकारेण—"भगाय वाशिताम्" इति । गर्भधारणयोग्या वाशिता । तस्य पशोः सूक्तस्य वपायाः पुरोनुवाक्यामाह । प्रातःकालेऽग्न्यादीन्देवानाह्वयामः । प्रतिदेवं वाक्यभेदेन प्राधान्यद्योतनाय प्रातश्शब्दावृत्तिः । यत्रावृत्तिर्नास्ति तत्राप्यावृत्तिरूह्या ॥

[18] अथ वपाया याज्यामाह । प्रातःकाले जितं जययुक्तमुग्रं वैरिषु तीव्रं भगं देवं हुवेम आह्वयामः । कीदृशम्? अदितेः पुत्रमादित्यं, य आदित्यो विशेषेण जगतो धारयिता तमिति पूर्वत्रान्वयः । आध्रश्चित दरिद्रोऽपि यं देवमभिमतप्रदं मन्यमानः भगं देवं भजीत्याह भजनं करोमीति ब्रूते, तथा तुरश्चित् कार्येषु त्वरमाणोऽपि यं भगं कार्यसाधकं मन्यमानो भजेयेति ब्रूते, तथा राजाचित् राजाऽपि यं भगं राज्यसाधकं मन्यमानो भजेयेति ब्रूते तं भगमाह्वयाम इति पूर्वत्रान्वयः ॥

राजाचिद्यं भगं भक्षीत्याह। [19]भग प्रणेतर्भग सत्य-
राधः। भगेमां धियमुदवा ददन्नः। भग प्र णो जनय
गोभिरश्वैः। भग प्र नृभिर्नृवन्तस्स्याम। [20]उतेदानीं
भगवन्तस्स्याम। उत प्रपित्व उत मध्ये अह्नाम्।
उतोदिता मघवन्त्सूर्यस्य। वयं देवानाꣳ सुमतौ
स्याम। [21]भग एव भगवाꣳ अस्तु देवाः॥ ७८॥
तेन वयं भगवन्तस्स्याम। तं त्वा भग सर्व इज्जो-

[19]अथ पुरोडाशस्य पुरोनुवाक्यामाह। हे प्रणेतः प्रकर्षेण नेतुं कुशल हे भगदेव अस्मान् कर्मणि प्रणयेति शेषः। हे सत्यराधः सत्यधन भगदेव अस्मभ्यं धनं देहीति शेषः। हे भग नोऽस्मभ्यमिमां धियं ददत् कर्मानुष्ठानबुद्धिं प्रयच्छन् उदव उत्कर्षेण रक्ष। हे भगदेव नः अस्मान् गोभिरश्वैः प्रजनय तद्युक्तान् कुर्वित्यर्थः। हे भग त्वत्प्रसादाद्वयं नृभिः पुत्रपौत्रादिभिः पुरुषैः नृवन्तः पुरुषवन्तः स्याम॥

[20]अथ पुरोडाशस्य याज्यामाह। उतेदानीमस्मिन्कालेऽपि भगवन्तः अनेन भगेन देवेन युक्ताः स्याम। उत प्रपित्वे सायंकालेऽपि, उत अह्नां मध्ये मध्याह्नकालेऽपि, उतोदिता उदयकालेऽपि भगेन देवेन युक्ताः स्याम। हे मघवन् देव वयं सूर्यस्य तव सुमतौ स्याम अनुग्रहबुद्धौ तिष्ठेम॥

[21]अथ हविषः पुरोनुवाक्यामाह। हे देवाः भगाख्यो देव एव भगवानस्तु तेन देवेन भगवन्तः सौभाग्यवन्तः स्याम। हे भगाख्य देव तं तादृशं त्वां सर्वइत् सर्व एव लोकः जोहवीमि आह्वयतीत्यर्थः। हे भगदेव स त्वमिह अस्मिन् कर्मणि नोऽस्माकं पुर एता पुरतो गन्ता भव॥

हवामि । स नो भग पुर एता भवेह । [२२] समध्वरायोषसो नमन्त । दधिक्रावेव शुचये पदाय । अर्वाचीनं वसुविदं भगं नः । रथमिवाश्वा वाजिन आवहन्तु । [२३] अश्वावतीर्गोमतीर्न उषासः । वीरवतीस्सदमुच्छन्तु भद्राः । घृतं दुहाना विश्वतः प्रपीनाः । यूयं पात स्वस्तिभिस्सदा नः ॥ ७९ ॥

[२२] अथ हविषो याज्यामाह—अस्य भगदेवस्य प्रसादादुषसः उषःकालदेवताः अध्वराय यज्ञनिष्पत्त्यर्थं संनमन्त समनमन्त । तत्र दृष्टान्तः—दधिक्रावित्यश्वस्य नाम । अश्वो यथाऽऽधानकाले शुचयेऽग्निनिष्पत्तये पदाय आहवनीयायतने संभाराणामुत्तरतः पादेनाक्रमणाय संप्राप्नोति तथैवोषःकालदेवता अपि प्राप्नुवन्तु । अन्योऽपि दृष्टान्त उच्यते—वाजिनो वेगवन्तोऽश्वा यथा रथमावहन्ति, तथा नोऽर्वाचीनमस्माकमभिमुखं वसुविदं धनस्य लब्धारं भगदेवमावहन्तु इह कर्मण्यानयन्तु ॥

[२३] अथ हविष एव विकल्पितां याज्यामाह । अश्वावतीः बहुभिर्गोभिर्युक्ताः वीरवतीः पुत्रपौत्रादिभिर्वीरैर्युक्ताः भद्राः कल्याणरूपाः घृतं दुहानाः घृतक्षीरादिद्रव्याणि संपादयन्त्यः विश्वतः प्रपीनाः सर्वमपि जगत्प्रकर्षेणाप्याययन्त्यः उषासः यथोक्तगुणविशिष्टा उषःकालदेवता भगस्य प्रसादात् सदं सदनं कर्मानुष्ठानस्थानं प्रत्युच्छन्तु प्रभातं कुर्वन्तु । हे उषासः यूयं स्वस्तिभिः क्षेमरूपैः फलप्रदानैः नः अस्मान् पात रक्षत ॥ अत्र विनियोगसंग्रहः—

विचक्षणा विचर्तुरः शर्मन्नधिविसर्जनाय ब्रह्म वनं ब्रह्म स वृक्ष आसीच्चतुरश्विदेवाः प्रपीना एकं च॥

पीवोऽन्नान्ते शुक्रासस्सोमो धेनुमिन्द्रस्तरस्वा-ञ्छुचिमा देवो यातु सूर्यो देवीमहमस्मि ता सू-र्याचन्द्रमसा नव ॥ ९ ॥

पीवोऽन्नामग्ने त्वं परियानाधृष्यश्शुचि नु स्तोमं विश्रयमाणो दिवो रुक्मोऽन्नं प्राणं ता सू-र्याचन्द्रमसा नवसप्ततिः ॥ ७९ ॥

हरिः ओम्.

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके अष्टमप्रपाठके नवमोऽनुवाकः. अष्टमप्रपाठकस्समाप्तः.

द्वितीयाष्टकं च समाप्तम्.

ओं तत्सत्.

---

ता सूर्येति पशुद्वंद्वे चन्द्रसूर्याख्यदेवते ।
हिरण्याद्भ्यो वहति स्याद्वासस्तत्रोपहोमकः ॥ १ ॥
प्रातरग्निमिति प्रोक्तं पशौ स्याद्भगदेवके ।
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ २ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरभूपाल-साम्राज्यधुरंधरसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये अष्टमप्रपाठके नवमोऽनुवाकः

द्वितीयाष्टकं समाप्तम्.

ॐ तत्सत्.